तुल्यं यथा त्वं पितृभिः पुरस्तात्
तैर्यौवराज्ये धुरमुद्वहस्व ॥ ९२ ॥
सर्वात्मना पर्य्यनुनीयमानो
यदा न सौमित्रिरुपैति योगम् ।
नियुज्यमानो भुवि यौवराज्ये
ततोऽभ्यषिञ्चद्भरतं महात्मा ॥ ९३ ॥
पौण्डरिकाश्वमेधाभ्यां वाजिमेधेन चासकृत् ।
अन्यैश्च विविधैर्यज्ञैरयजत्पार्थिवात्मजः ॥ ९४ ॥

चतुरङ्गबलेन सह पूर्वराजाध्युषितामिमां गां मया सहातिष्ठ । पूर्वराजानो मन्वादयस्तैरध्युषितां पालिताम् । कीदृशमास्थानं मया भुवः कर्त्तव्यं भवता सहेत्यत्राह,—तुल्यमित्यादि । पुरस्तात् महाराज्याभिषेकात् पूर्वं पितृभिः स्वपितृभिस्तुल्यं यथा भवति तथा । तैर्य्या यौवराज्ये धूर्त्ता तां धुरमुद्वहस्व । आत्मना सह वनवासे दुःखानुभवाद्राज्ये सहसुखानुभवार्थं लक्ष्मणं प्रति यौवराज्यप्रार्थनेति भावः ॥ ९२ ॥

सर्वात्मना पर्य्यनुनीयमानः । ज्येष्ठे भरते विद्यमानेऽहं यौवराज्यानर्हं इति निषेधे क्रियमाणेऽपि पुनःपुनरनुनीयमान इत्यर्थः । नियुज्यमानोऽपि न्यायप्राप्तस्वीययौवराज्येन भरतेनानुनीयमानोऽपि योगं यौवराज्यसंसर्गं नोपैति नेच्छति स्म ततो भरतं यौवराज्येऽभ्यषेचयत् ॥ ९३ ॥

राज्यं दशसहस्राणि प्राप्य वर्षाणि राघवः।
दशाश्वमेधानाजह्रे सदश्वान् भूरिदक्षिणान् ॥ ९५ ॥
आजानुलम्बिबाहुः स महावक्षाः प्रतापवान्।
लक्ष्मणानुचरो रामः शशास पृथिवीमिमाम् ॥ ९६ ॥
राघवश्चापि धर्मात्मा प्राप्यराज्यमनुत्तमम्।
ईजे बहुविधैर्यज्ञैः ससुतभ्रातृबान्धवः ॥ ९७ ॥
न पर्य्यदेवन् विधवा न च व्यालकृतं भयम्।
न व्याधिजं भयञ्चासीद्रामे राज्यं प्रशासति ॥ ९८ ॥
निर्दस्युरभवल्लोको नानर्थं कश्चिदस्पृशत्।
न च स्म वृद्धा बालानां प्रेतकार्य्याणि कुर्वते ॥ ९९ ॥
सर्वं मुदितमेवासीत् सर्वो धर्मपरोऽभवत्।
राममेवानुपश्यन्तो नाभ्यहिंसन् परस्परम् ॥ १०० ॥
आसन् वर्षसहस्राणि तथा पुत्रसहस्रिणः।
निरामया विशोकाश्च रामे राज्यं प्रशासति ॥ १०१ ॥
नित्यमूला नित्यफलास्तरवस्तत्र पुष्पिताः।
कामवर्षी च पर्जन्यः सुखस्पर्शश्च मारुतः ॥ १०२ ॥

पौण्डरीकाश्वमेधेत्यादिरुत्तरकाण्डार्थसंक्षेपः। पौण्डरीकाश्वमेधाभ्यामिति सामान्यत उक्त्वा तत्रैव विशेषमाह,—वाजिमेधेन चासकृदिति ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥

स्वकर्मसु प्रवर्त्तन्ते तुष्टाः स्वैरेव कर्मभिः ।
आसन् प्रजा धर्मपरा रामे शासति नानृताः ॥ १०३ ॥
सर्वे लक्षणसम्पन्नाः सर्वे धर्मपरायणाः ।
दशवर्षसहस्राणि रामो राज्यमकारयत ॥ १०४ ॥
धर्म्यं यशस्यमायुष्यं राज्ञाञ्च विजयावहम् ।
आदिकाव्यमिदञ्चार्षं पुरा वाल्मीकिना कृतम् ॥ १०५ ॥
यः शृणोति सदा लोके नरः पापात् प्रमुच्यते ।
पुत्रकामश्च पुत्रान् वै धनकामो धनानि च ॥ १०६ ॥
लभते मनुजो लोके श्रुत्वा रामाभिषेचनम् ।
मह्रीं विजयते राजा रिपूंश्चाप्यधितिष्ठति ॥ १०७ ॥
राघवेण यथा माता सुमित्रा लक्ष्मणेन च ।
भरतेन च कैकेयी जीवपुत्रास्तथा स्त्रियः ॥ १०८ ॥
श्रुत्वा रामायणमिदं दीर्घमायुश्च विन्दति ।
रामस्य विजयञ्चेमं सर्वमक्लिष्टकर्मणः ॥ १०९ ॥
शृणोति य इदं काव्यं पुरा वाल्मीकिना कृतम् ।

वर्षसहस्राणि आसन् जना इति शेषः ॥ १०१ ॥ १०२ ॥ १०३ ॥
॥ १०४ ॥

आर्षं ऋषिर्वेदस्तत्सम्बन्धि । वेदोपवृंहणमिति यावत् । पुरा
पुरातनम् ॥ १०५ ॥ १०६ ॥

श्रद्दधानो जितक्रोधो दुर्गाण्यतितरत्यसौ ॥ ११० ॥
समागम्य प्रवासान्ते रमन्ते सह बान्धवैः ।
शृण्वन्ति य इदं काव्यं पुरा वाल्मीकिना कृतम् ॥ १११ ॥
ते प्रार्थितान् वरान् सर्वान् प्राप्नुवन्तीह राघवात् ।
श्रवणेन सुराः सर्वे प्रीयन्ते सम्प्रशृण्वताम् ॥ ११२ ॥
विनायकाश्च शाम्यन्ति गृहे तिष्ठति यस्य वै ।
विजयेत महीं राजा प्रवासी स्वस्तिमान् भवेत् ॥ ११३ ॥
स्त्रियो रजस्वलाः श्रुत्वा पुत्रान् सूयुरनुत्तमान् ।
पूजयंश्च पठंश्चैनमितिहासं पुरातनम् ॥ ११४ ॥
सर्वपापैः प्रमुच्येत दीर्घमायुरवाप्नुयात् ।
प्रणम्य शिरसा नित्यं श्रोतव्यं क्षत्रियैर्द्विजात् ॥ ११५ ॥
ऐश्वर्यं पुत्रलाभश्च भविष्यति न संशयः ।
रामायणमिदं कृत्स्नं शृण्वतः पठतः सदा ॥ ११६ ॥

रामाभिषेचनम् । तदवधिकमित्यर्थः । रिपूनधितिष्ठति । तान् विजयते इत्यर्थः ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ १११ ॥

संप्रशृण्वतामिति पाठः ॥ ११२ ॥

विनायकाः विघ्नकारिणो देवगणविशेषाः ॥ ११३ ॥

स्त्रियो रजस्वलाः शुद्धस्नानानन्तरं षोड़शदिनावधि ॥ ११४ ॥
॥ ११५ ॥

प्रीयते सततं रामः स हि विष्णुः सनातनः।
आदिदेवो महाबाहुर्हरिर्नारायणः प्रभुः॥ ११७॥
एवमेतत् पुरा वृत्तमाख्यानं भद्रमस्तु वः।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्द्धताम्॥ ११८॥
देवाश्च सर्वे तुष्यन्ति ग्रहणात् श्रवणात्तथा।
रामायणस्य श्रवणे तृप्यन्ति पितरः सदा॥ ११९॥
भक्त्या रामस्य ये चेमां संहितामृषिणा कृताम्।
ये लिखन्तीह च नरास्तेषां वासस्त्रिविष्टपे॥ १२०॥

कुटुम्बवृद्धिं धनधान्यवृद्धिं
स्त्रियश्च मुख्याः सुखमुत्तमञ्च।
श्रुत्वा शुभं काव्यमिदं महार्थं
प्राप्नोति सर्वां भुवि चार्थसिद्धिम्॥ १२१॥
आयुष्यमारोग्यकरं यशस्यं
सौभ्रातृकं बुद्धिकरं शुभञ्च।

सदेत्यनेन कालत्रयेऽपीत्यर्थः॥ ११६॥ ११७॥ ११८॥ ११९॥

ये ऋषिणा कृतां रामस्य संहिताम्। रामायणमित्यर्थः। लिखन्ति च चात् पाठयन्ति। त्रिविष्टपे ब्रह्मलोके पठन् रामायणं भक्त्यावः पादं पदमेव वा। स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदेति वच-

श्रोतव्यमेतन्नियमेन सद्भि-

राख्यानमोजस्करमृद्धिकामैः॥ १२२॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे

त्रिंशोत्तरशततमः सर्गः॥ १३०॥

मात्। अत्र फलश्रुतिश्लोकाः कतकव्याख्याने नोपलभ्यन्ते॥ १२०॥

॥ १२१॥ १२२॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्ध-

काण्डे त्रिंशोत्तरशततमः सर्गः॥ १३०॥

इति युद्धकाण्डं समाप्तम्